ततः 'उदु त्यं जातवेदसम्' इत्युत्थाप्य पञ्चब्रह्मसंज्ञकेन प श्चानुवाकेन देवालयं प्रवेश्य मणिमुक्ताप्रवाळसुवर्णर जतानि पादपीठे निधाय 'नमस्ते रुद्र मन्यवे' इति रुद्रं स्थापयेत् ॥ २१

अथ गन्धपुष्पधूपदीपान्याकाशोन्मुखानि कृत्वा उपोत्थाया वाहनं करोति प्रणवयुक्तव्याहृतीभिर्व्यस्ताभिस्समस्ता भिश्च—'ओं भूः पुरुषमावाहयाम्यों भुवः पुरुषमा वाहयाम्यों सुवः पुरुषमावाहयाम्यों भूर्भुवस्सुवः पुरु षमावाहयामि' इति 'आयातु भगवान् महादेव' इत्यावाह्य रत्नाम्बुकलशेनाभिषिञ्चति 'प्रणवेन धार येत् ब्रह्म' इति विज्ञायते ॥ २२

प्रणवेन कूर्चं ददाति ॥ २३

विष्णुपदाश्यामाकपद्मपत्रकलशेन पाद्यं ददाति ॥ २४

एलालवङ्गतक्कोलकर्पूरमिश्रकलशेनाचमनीयं ददाति ॥ २५

आपः क्षीरकुशाग्रैश्चाक्षतैश्च तण्डुलैः । यवैस्सिद्धार्थकैश्चार्घ्यं ददाति—'इमा आपश्शिवाश्शिवतमाः पूताः पूततमा मेध्या मेध्यतमा अमृता अमृतरसाः पाद्या आचम- नीया अर्घ्यास्ता जुषतां प्रतिगृह्यतां प्रतिगृह्णातु भग- वान् महादेवो रुद्राय नमः' इति पाद्यमाचमनीयमर्घ्यं ददाति ॥ २६

'नमस्ते रुद्र मन्यवे' इति प्रतिसरं विस्रंसयाति ॥ २७